॥ श्री ॥



# भार्गवचम्पूः

मुम्बय्याम्

गोपाळ नारायण कंपनी, बुकसेलर्स.

१८९१

किम्मत ८ आणे.

## प्राकृत पुस्तकें विक्रीस तयार.

| पुस्तक | रु० | आ० |
|---|---|---|
| सिविल प्रोसिजर कोड सटीक | ५ | ० |
| क्रिमिनल प्रोसिजर कोड स० | ५ | ० |
| पिनलकोड सटीक | ७ | ० |
| पुराव्याचा आक्ट | ० | ८ |
| रजीसट्रेशन आक्ट | ० | ६ |
| ल्यांड रेवेन्य कोड | ० | ८ |
| पिनल कोड | १ | ८ |
| ल्यांडरवीन्युकोड सटीक | १ | ० |
| सतारीचें पहिलें पुस्तक | १ | ४ |
| वेषधारी पंजाबी | १ | ६ |
| संगीत रामराज्य वियोग | ० | १२ |
| संगीत सौभद्र नाटक | ० | १२ |
| कामकंदला नाटक | १ | ० |
| हातीमताई. | २ | ० |
| सन्मार्गबोधकस्त्रीचारित्रभा. १ | २ | ० |
| चूडामणी | ० | १२ |
| सुशीलगृहस्थ नाटक | १ | ४ |
| कामनाकल्पवृक्ष | १ | ८ |
| गोपीचंद नाटक हिंदु०भाषेत | ० | १२ |
| मंजुघोषा | १ | ४ |
| कीर्तनतरंगिणी भाग १ | ० | १४ |
| " २ | १ | २ |
| " ३ | ० | १४ |
| तंतुवाद्य | १ | ८ |
| तुकारामाची गाथा | २ | ८ |
| गुरुचरित्र मोठ्या अक्षराचें | ३ | ० |
| " रेशमी | २ | ० |
| उपयुक्त कथासंग्रह भाग १ | २ | ० |
| विदुरनीति | ० | ४ |
| सार्थगीता | ० | १२ |
| स्त्रियांकरितांगाण्यांचें पु.भा१ | ० | ६ |
| श्रीभावार्थरामायण | २० | ० |
| वेताळपंचविशी | ० | ६ |
| रामाश्वमेध | ३ | ० |
| कल्कीपुराण | २ | ० |
| [illegible]तखंडाचा अर्वाचीनकोश | ४ | ८ |
| परशीयन नायटस भाग१ | १ | १२ |
| " " २ | १ | १२ |
| संगीतशाकुन्तल | ० | १२ |

| पुस्तक | रु० | आ० |
|---|---|---|
| सङ्गीत मृच्छकटीक | ० | १२ |
| गुलबंकावली | १ | ४ |
| होनाजी बाळकृत लावण्या | १ | ० |
| संस्कृत प्राकृत कोश | ६ | ० |
| संसारचोपडी | ० | १२ |
| सूपशास्त्र | १ | ४ |
| शुकबाहत्तरी | ० | ६ |
| शिवलीलामृत गुटका | ० | ८ |
| शार्ङ्गधर | ३ | ० |
| वैद्यक संग्रह | २ | ४ |
| विवेकसिंधु | १ | ४ |
| वाल्मीकिरामायण मराठी | २० | ० |
| वसंतकोकिला | १ | ८ |
| रुक्मिणीस्वयंवर रेशमी बारीक | ० | ८ |
| रामजोशी लावण्या | ० | ६ |
| मदालसा नाटक | ० | १४ |
| मित्रचंद्र | १ | ४ |
| माधवनिदान | ३ | ४ |
| [illegible] | ० | १२ |
| पदबोधिनी गीता | १ | ८ |
| ज्योतिषसार | १ | ४ |
| गीतार्थ बोधिनी | ४ | ० |
| केकादर्श | १ | ० |
| उदार दामोदर नाटक | १ | ४ |
| आर्यासंग्रह | १ | ४ |
| आनंदफंदी लावण्या | ० | ८ |
| अध्यात्मरामायण सार्थ | ७ | ० |
| कादंबरी उत्तर भाग | ० | १४ |
| चिकित्सासार | २ | ० |
| पदसंग्रह | ० | १४ |
| पंढरीमाहात्म्य | ० | १२ |
| भक्तसार नवनाथ | ४ | ० |
| वधूदर्पणमाला | १ | १२ |
| विराटपर्व नाटक | ० | १२ |
| सीतास्वयंवर नाटक | ० | १० |
| सुभद्राहरण नाटक | ० | १० |
| सुलोचना नाटक | ० | १२ |
| सङ्गीत वेणीसंहार नाटक | ० | १२ |

गोपाळ नारायण आणि कंपनी.

श्रीः

रामकृष्णसूरिविरचिता

# भार्गवचम्पूः ।

## प्रथमः स्तवकः ।

श्रीपतिं प्रणमद्वृन्दारकवृन्दाभिनन्दनम् ॥

भवबन्धच्छिदं वन्द्यं वन्दे मान्द्यनिवृत्तये ॥ १ ॥

देवः शारदपद्मकोरकमदप्रध्वंसिपद्माकुच-

प्राग्भारस्फुटचारुपत्ररचनाचातुर्यरत्नाकरः ॥

लक्ष्मीनेत्रकटाक्षवीक्षणशरव्यापारलक्षीकृतः

क्षिप्रं पक्षिपतिध्वजो वितनुतां शास्तं प्रशस्तं मम ॥२॥

निर्निमेषपदावाप्त्यै संविशन्ति वनेष्वमी ॥

गुणजालयुताः सन्तो धीवरा इति मे मतिः ॥ ३ ॥

मानससंचारिपदा भव्यगुणा भूतिमाश्रिता सरसा ॥

सत्कृतिरपि बहुकाकैः कलहंसीव प्रदूष्यते कुजनैः ॥ ४ ॥

तत्र ।

---

१ वृन्दारकवृन्दो देवसमूहः । २ जडबुद्धित्वनाशाय । ३ शरत्कालीन-पद्मकलिकागर्वहरौ यौ कुचप्राग्भारौ (प्राग्भारौ शैलशृङ्गौ ( टेंकडीति भाषायां ) ताविव कुचौ स्तनौ, 'उपमितं व्याघ्रादिभि'रीति समासः ) तयोः स्फुटा स्पष्टा या चार्वी सुन्दरा पत्ररचना कस्तूरीकुङ्कमादिभिश्चित्रलेख्यं तद्विषयं या चतुरता तस्या रत्नाकर इव । अतीव कुशल इत्यर्थः । 'शैलाग्रे शिखरं शृङ्गं दन्तः प्राग्भार इत्यपि' इत्यभिधानम् । ४ गरुडध्वजः । ५ शास्तं मङ्गलम् । ६ निर्निमेषा देवा मत्स्याश्च । ७ काननेषु उदकेषु च । ८ भतिरैश्वर्यं भस्म च ।

भाव्यालंकृतिहृद्यवर्णसुपदन्यासोज्झितामत्कृतिः
क्वेयं नूनमनल्पदूषणपदं स्यादेव किं तावता ॥
सन्तः सन्ति सदा यदास्यसरणीसंचारिणः प्रस्फुर-
द्दोषास्तेपि गुणाः स्युरम्बुदमुखैरम्भासि सिन्धोरिव ॥५॥

अस्ति च चतुःसमुद्रवलयमध्यगतसकलवसुन्धराखण्डमण्डनं खर्वीकृतशर्वारिगर्वपर्वतैः विनिर्जितकोपाटोपैः स्फुरज्जटामुकुटविराजितोत्तमाङ्गैः पुरन्दरादिवन्दितवन्द्यसुन्दरमुकुन्दपदारविन्दमकरन्दषट्पदैराविरतानित्यानित्यवस्तुविचारपरवशैर्मुनिजनैर्जनितसौभाग्यं सारिकासारसहंसशुकचक्रवाककोकिपरंपुष्टकण्ठध्वनिभिः पान्थानाह्वयदिवातिरमणीयमसमप्रदेशं कस्तूरीहरिणवराहसमुत्तुङ्गमातङ्गगवयकृष्णसारमृगपञ्चाननप्रभृतिभिर्वनचरैरप्यन्योन्यमवनपरैः पशुभिराधिष्ठितम् अधरीकृतनन्दनवनरामणीयकं निजाविमलकीलालबहुललोलकल्लोलोच्छलच्छालिततरतुषारपवित्रिताखिलराशे(?)जनाभखण्डसुकीर्तिकेतुयष्टेः स्नानार्थागताकिन्नरीगणनिर्धौतस्तनकुङ्कुमपङ्काङ्कितोत्तुङ्गतरङ्गवत्या भगवत्याः सरस्वत्यास्तीरम् ।यत्र परोपकारार्थजन्मानोऽनेकशाखिनः कमनीयपारिच्छदाः फेनपा इव पादपाः सन्ति । यत्र च लताः सर्वर्तुपुष्पवत्योपि अप्रदोषविकासिन्यो मुनिनिचयावाचितकुसुमाः सन्ति ।

चूताश्वत्थकपित्थकुन्दतिलकप्लक्षाक्षसन्तानकै-
र्बिल्वानलितमालतालपनसप्रोच्चाप्रियालेङ्गुदैः ॥

---

१ ह्रस्वीकृत–लघूकृत–। २ परपुष्टाः कोकिलाः । ३ रामणीयकं सौन्दर्यम् । ४ कीलालं उदकम् ।५ फेनपाः मेघटवा ? । ६ 'तिळवा' इति भाषायाम् । ७ कल्पवृक्षाः ।

खर्जूरार्जुनभूर्जलोध्रबकुलैराम्रातकाद्यैरपि
व्याप्तं तद्वरभूरिभूरुहगणैर्देवैर्यथा विष्टपम् ॥ ६ ॥
बहुलशकुनि विपुलार्जुनमभितसकृपभीष्मशतद्रुपदम् ॥
सुबहुशिखण्डिसमधिकं भारतचरितात् सरस्वतीतीरम् ॥ ७

नूनमीर्ष्याभरादिव तयैव सरस्वत्या ।
अमरपुरसमृद्धिस्पर्द्धया वर्धयित्वा
निजरुचिरतटाकप्रान्तसौभाग्यभाग्यम् ॥
तदनुभवसमोदस्तापसानां समूहः
समकृतमुरसम्पद्यस्य हः सस्पृहोपि ॥ ८ ॥

कदाचित्तत्र निगमाध्ययनचयनादियजनदत्तावधाना विषविषमविषयाविषह्यरयग्रस्तविवेकग्राम्यजनानुग्राहका निखिलनिगमार्थपारदृश्वानो वशीकृतकरणान्तःकरणमातरिश्वानो भूरि यज्वानस्तपस्विनोवतेरुर्येषामतिविचित्रतमं चारितम् ॥

भवे रता अप्यभवाश्च केचिद्रमापसक्ता अपि नो रमापाः ॥
हिरण्यगर्भोपसृतास्तथापि हिरण्यगर्भास्तु न ते द्विजाग्र्याः ॥ ९ ॥

---

१ आम्रातको मधूकवृक्षः । २ जगत् । ३ शकुनिः पक्षिः दुर्योधनमातुलश्च । ४ अर्जुना वृक्षाः अर्जुनो भीमानुजः । ५ सकृपाणि सुदर्शनानि भीष्माणि भयङ्कराणि शतानि अनन्तानि द्रुपदानि वृक्षस्थानानि यस्मिन् पक्षे-कृपः कृपाचार्यः भीष्मः प्रसिद्धः द्रुपदः द्रुपददेशराजा प्रसिद्धः । ६ शिखण्डी मयूरः भीष्मशत्रुश्च । ७ करणानि इन्द्रियाणि । ८ भवः शङ्करः संसारश्च । ९ रमापः श्रीपतिर्विष्णुः द्रव्यवांश्च । १० जगदुत्पत्तिकरो विष्णुः । ११ हिरण्यगर्भः श्रीमान् ।

संसारतापसंशान्त्यै तपोभिस्ते तपस्विनः ॥
चित्रं सततमर्चन्ति श्रीवरं जनतापदम्[1] ॥ १० ॥

अवतीर्य सरस्वतीतीरं वीरुत्तरुणतरुसमुन्निद्रसान्द्रकुसुमसमूहो-द्भमद्भ्रमरमञ्जुसिञ्जनप्रणुन्ना इव स्वयमपि तत्तटपावित्र्यहृतचित्ताः सत्रार्थं मन्त्रयामासु ।

इतो भूमी रम्याऽसितमृगपदाङ्कैरतितरा-
मितो दर्भाः शश्वद्धरित इह नीवारपटलम् ॥
इतो वातः सारस्वतजलकणान् मूर्छति वहन्
पिकः प्रोच्चै रम्यं मधुसमयमावेदयति नः ॥ ११ ॥

अपि चास्माकम् ।

यज्ञसम्भारसौलभ्याद्विलुभ्यन्मनसामिह ॥
वृत्तिमुत्साहयत्येतत्तीरं सारस्वतं क्रतौ ॥ १२ ॥

तद्युज्यतेत्र यज्ञभागभुजः सुधाभुजः सभाजयितुम् । ततः ।

युक्तमित्येव ते सर्वेप्यनुमान्य समुत्सुकाः ॥
समग्रां सत्रसामग्रीं कल्पयांचक्रुरञ्जसा ॥ १३ ॥

अनन्तरं कर्षणादिना भूशुद्धिं विधाय विरचितश्च ।

तत्तच्चिन्हवदुन्नतोन्नतचतुर्द्वारः सुधारञ्जितः
प्रत्यग्रस्फुरदाम्रपल्लवभरक्लृप्तोल्लसत्तोरणः ॥
सद्रूपैरभिशोभितश्च निगमध्वानैकशाली पृथु-
प्राग्वंशः कुशनिर्मितास्तरणवान् रम्यः क्रतोर्मण्डपः ॥ १४ ॥

---

१ दुष्टजनानां तापदं जनता जनसमूहः तस्य पदं स्थानम् । २ लतासमूहः वीरुत् । ३ प्रणुन्नाः प्रेरिताः । ४ सुधया चूर्णेन रञ्जितः धवल इत्यर्थः । ५ पृथुः भव्यः प्राग्वंशः यस्मिन् । हविर्गृहात्पूर्वदेशे सदस्यादीनां यद्गृहं स प्राग्वंश इत्यभिधीयते ।

अग्निशालायां च गार्हपत्याहवनीयादीनां शरणानि[1] मेखलाभिरुपशोभितानि विरचय्य ।

ततः स्नात्वाथ सलिले सरस्वत्या मुनीश्वराः

कृतजप्याश्च ते विप्रा यज्ञवाटमुपागमन्[2] ॥ १५ ॥

प्रविश्य तस्मिन्विशालेपि सशाले मण्डपे प्रागग्रेषु दर्भेषूपविष्टाः प्रविभक्तकार्याधिकारा मुनयो महता पुण्याहघोषेण दीक्षां प्रवर्तयामासुः । तत्र प्रथमं मुख्यदेवतोद्देशेन क्रियमाणे सङ्कल्पे विकल्पस्तेषामन्तःकरणसदनं मदमत्तमातङ्ग इवोच्चशिलोच्चयदरीमध्यमध्यतिष्ठन् हरिहरविषयः ।

जगतामीश्वरत्वेन त्रयः पूज्यास्तथाप्ययम् ॥

नरः कस्यानुसरणादत्यन्तं क्षेममश्नुते ॥ १६ ॥

इति तथाविधे व्यतिकरे[3] हिरण्यगर्भोपासकाः प्रोचुः । अहो कथमेते पण्डिता अपि हस्तस्थितवस्तुवीक्षणकृते दर्पणापेक्षावतां पन्थानमनुसरन्ति । यतः स्पष्टमेवैतत् ।

येन स्वीयेन धाम्ना ज्वलदनलचलज्जालमालागरिम्णा

पुष्टेनेष्टैस्तपोभिर्लयसमयतमस्तोमलीढान्तराणाम् ॥

नृणां पूर्णात्मबोधप्रमदमविदुषां दृष्टिरुन्मीलिता द्राक्

यष्टव्यः सृष्टिनाथः स तु सततमतः सर्ववेदैकसर्गः[4] ॥१७॥

तदुत्तरं सानुशयं शैवाः ।

यदङ्घ्रिप्रेक्षार्थागतमुदितवृन्दारकजनः

प्रभाचक्रभ्राजन्मुकुटतटसंघट्टगलितैः ॥

---

१ स्थानानि । २ यज्ञस्थानम् । ३ व्यसने । ४ हिरण्यगर्भो देवः ( ब्रह्मदेवः ) ।

स्फुरद्रत्नैर्नित्यं जनितसिकतं प्राङ्गणमहो
यदीयं तं देवं भवमिह भजामः सुरवरम् ॥ १८ ॥

तदूर्ध्वं भागवताः ।

यो नेत्रश्रुतिभारतीप्रभृतिभिर्विज्ञायते नो गुणै-
र्यश्चाम्नायसमूहशीलनपरैस्तात्पर्यवृत्त्योच्यते ॥
तत्त्वानां निचयं प्रविष्ट इति या सम्भाव्यते स्वेच्छया
भक्तानां च भवाय भावितततुः सेव्यो हरिः सर्वदा॥१९॥

इत्याग्रहग्रहोपमग्रस्तान्तरात्मानो महात्मानः स्वस्वोपासनवासनापरवशत्वेन परस्परं निजगदुः । ततः केचित् सुविचारशीलनपराः । आः किमेतेन विचाराचतुरेण भवतां विवादेन । तन्निशम्य वैष्णवादयः सर्वेऽप्येकीभूताः । कथमविचाराचतुरत्वमस्मद्विवादस्य यतो ब्रह्मादिदेवतानाम् ।

तिसृणामपि भूरिभाग्यभाजां जगदीशत्वमयं जगाद देवः ॥
स्मृतयश्च ततो वयं प्रपन्नाः शरणं तच्चरणाववापहत्यै ॥२०॥

विवेकिनः सत्यमुक्तं तथापि । यथा वा ।

दीपानामरुणसितादिकाचसारैः
क्लृप्तेषु[1] स्फुटचषकेषु संस्थितानाम् ॥
दीपत्वं यदि च समं तथापि कान्तिः
श्वेतस्थे बहुलतमा तमांसि हन्ति ॥ २१ ॥

एवमेव निगमस्तुतपदनीरजानां तद्गुपाधिकृतवैषम्यजुषां तेषामीश्वरत्वाविशेषेपि यत्तूर्गमर्णवसारे संसारे निमज्जतां जन्मिनामज्ञान-

१ स्वतन्त्रपात्रेषु ।

निवृत्तिद्वारा तत्स्वरूपसम्प्राप्तिफलमञ्जसा भविष्यतीति विज्ञानार्थं कश्चित्संप्रेषयितव्यः । ततः सर्वेप्यैकमत्यमनुसृत्य को वै प्रेषयितव्यः कश्च कार्यक्षम इति च विचारयामासुः । विचार्य च धैर्यचातुर्यादिचर्याविद्धुर्यं विधातृपुत्रं भृगुं तद्योग्यं मत्वा तं प्रत्यूचुः।

भृगो याहि क्षिप्रं प्रथितगुणशाली सकरुणो
भवाब्धेरातङ्काचरणशरणोत्तारणपरः ॥
जगज्जन्मत्राणप्रशमनविलासेष्वयमिति
त्रिषु ज्ञात्वेहि त्वं मुनिनिचयमादाय झटिति ॥ २२ ॥

स इत्थमाकर्णितमुनिजनवचनो भृगुः स्वचित्तेऽचिन्तयत् । अहो किमेतत् । छलसाध्यमिदं कार्यं मां प्रत्युपदिशन्ति । नायं हितोपदेशस्तर्हि त्यजेदेकं कुलस्यार्थे इति सर्वेपि मां महदवज्ञान्धकूपे प्रवेशयन्ति । तदिदमकार्यमनार्यक्षममवधार्य प्रावोचत् ।

कथं जगत्पूज्यपदेषु शश्वच्छलप्रयोक्ता भविता समृद्धः ॥
जिजीविषुः प्राणहरं निगीर्य क्रूरं गरं को हि भवेत्कृतार्थः २३

एतन्निशम्य मुनयः । न त्वमीशानां छलमकार्यं कृत्वापि पापभाक् । यतः स्वार्थं न प्रवृत्तः सर्वलोकशङ्कापरिहारेण परोपकारार्थम् । अकार्यकारिणोपि परोपकारिणो न दूष्यन्ते । शृणु तावत् ।

सशम्भोरम्भोधिं प्रभवमभियातुं पशुपते-
र्विषं किं व्यापारो जगति कथयस्वात्स्तुतिपदम् ॥
स्तुतस्त्वाष्ट्रप्राणप्रमथनविधातुः सुरपतेः
प्रवृत्तिः सौभाग्यं वितरति परेषामुपकृतौ ॥ २४ ॥

---

१ प्रसिद्धगुणयुक्तः । २ आतङ्को रोगःपीडा वा ।

तस्मात्परोपकारार्थमकार्यप्रवृत्तिरपि न दूषणार्हा । प्रत्युत भीतेष्वपि फलतीति । पश्य ।

सम्प्राप्तं बत कर्दमादिभिरलं कष्टात्कलत्रं हरे-
स्तुष्टादेकमथाच्युतेन धरणीजन्मानमुन्मथ्नता ॥
आदित्यार्थकरेण सार्धमभितस्तेषां सहस्राधिकं
लब्धं कोपि समीहितेष्टफलके लोकोपकारं विना ॥२५॥

तत्तावत् त्वमप्यनया लोककर्तृप्रवृत्त्यापि भविष्यासि प्रशंसापात्रमित्युक्त्वा तूष्णीं स्थितेषु तेषु महर्षिषु ।

अथ परिहृतशङ्कातङ्कपङ्को मुनीना-
मनुनयपटुवाचां वाचमुच्चैर्निशम्य ॥
तदुदितनयवर्त्मन्यर्पितात्मार्यवृतः
सरभसमभिगन्तुं व्यापृतोभूत्तदर्थे ॥ २६ ॥

इति सूरीन्द्रश्रीमद्रामकृष्णविरचितायां भार्गवचम्प्वां प्रथमस्तबकोयं समाप्तः ॥ १ ॥

—०:०—

## द्वितीयस्तबकः ।

अत्रान्तरे । प्रभूततमतमास्विनीतमस्तोमसम्भूतजननयनोपरोधसंहारैकचतुरकरः सहस्रकरः समतिक्रम्य प्राचीमुखान्नभःसरणिं स्वकरपरिमृष्टवारुणीदिगम्बरः कामुक इव शनैरस्ताचलविशालमौलिमनुससार । आश्चर्यमिदम् ।

---

१ अतिशयेन प्रभूता । २ आकाशमार्गम् ।

पुंसां पांसुहृदंशुमानयमहो निर्दोषरागामिमां
मानार्हामपि पद्मिनीं स्वरमणीं त्यक्त्वा प्रतीच्यां रतः ॥
तत्सङ्गाय तदम्बरं परिमृशन् दोर्भिः प्रयात्यग्रतः
कष्टं धामवतोपि तस्य चरितं जारापराधस्तु कः ॥ १ ॥

अपि च ।

कृत्स्नं भूचक्रवालं निजकरनिकरैः सम्प्रशाम्य प्रचण्डै-
श्चातुर्वर्ण्यं च तत्तत्सुविहितकरणे योजयित्वाऽव्यलीकम् ॥
प्राप्ते कालेथ पश्चात्सपदि पुनरयं दीपसंक्रामितश्री-
रस्तं प्रत्येति कृत्वाप्यहह दिनकरः कोकलोकं सशोकम् ॥२॥

अभ्युदये भवति नरः पूज्यो न विनाशकाल इति सिद्धम् ॥
अद्भुतमिदं यदर्घ्यैरुदयेऽस्तमनेपि पूज्यते भास्वान् ॥३ ॥

इति कौतूहलादनेकविधं तर्कितवत्सु जनेषु । अस्तंगतवति भगवत्यंशुमाति अतिबहलतमतमस्तोमसंपूरिताम्बरतलोयं भुवनगोलको रत्यञ्जनकरण्ड इव संवृत्तः । अथ वा ।

निजकरपरिमर्शोद्भूतनूत्नप्रमोद-
प्रसरसमनुरञ्जद्वारुणीसङ्गसक्तः ॥
रविरसितपटेन व्यावृणोद्गन्तुकामो
भुवनमिव सलज्जास्त्वन्धकारच्छलेन ॥ ४ ॥

ततः सुगूढतरप्रस्तरोच्चयकन्दराधिष्ठितेषु बनचरसमुहेषु । भयादिव सञ्चरत्सूपवनतरुकोटरान्तरालतलं विहङ्गेषु । सनदत्सु च काककुलस्पर्द्धान्धीकृतादिवान्धेषु । मानवतीष्विव मुकुलितासु

१ तेजस्विनः । २ सुखेन यथातथा । ३ चकोर समूहम् ।

कमलिनीषु । प्रियविरहदूयमानसेषु कोकलोकेषु[1] । प्रोद्यद्भव्ययौवनमदालसाङ्गनाङ्गरङ्गेषु रन्तुकामे रङ्गोपजीविनीव शनैः सञ्चरतीव भगवति मकरध्वजे[2] ।

व्यसने इव सप्तांशुर्दीप्तजिह्वाप्रदाहिते
नभसि प्रोद्यताः किंतु स्फोटका इव तारकाः ॥ ५ ॥

अपि च ।

भास्वत्कराग्निसदग्धं नभोभस्मेव मेचकम्[3] ॥
यास्तस्मिन्विस्फुरत्तारास्ता हुताशकणा इव ॥ ६ ॥

अथ वा ।

ध्वान्तस्यान्ताय गच्छन्नवविरहवतीं प्राग्दिशं प्रेक्ष्य दत्वा
सूर्यो धुर्यः स्वहस्ताहृतगगनसरस्तारहारानयासीत् ॥
मग्नं तं पश्चिमाब्धौ परयुवतिवशाद्वीक्ष्य पूर्वाक्तितोरो-
घातभ्रश्यत्सुमुक्तो ज्वलितमिव नभस्तारकाढ्यं वदन्ति ॥७॥

ततः कलावानपि स्वीयकलाकलापेन निखिललोकलोचनानि कुवलयानि चाह्लादयन्नमिताशिखरराजितमुदयाचलमूर्धानमारुरोह

रतिनाथसहायतां प्रपन्नः कुमुदानन्दकरः कुरङ्गलक्ष्मा ॥
ककुभां वलयं विभासयन्त्सन्नुदगादिन्दुरमन्दकान्तिकन्दः ८

नूनमिन्दिराबन्धोरिन्दोर्मदनसहायत्वं श्रिया प्रार्थितेन भगवता श्रीशेनैव प्रतिपादितम् ।

गीर्वाणैः संप्रमथ्य प्रसभमपहृतश्रीः पिता मे कलावां-
स्तत्सूनुर्बन्धुरिन्दुर्मम वितर विभो वित्तिमत्सानुरूपम् ॥

---

१ चक्रवाक समूहेषु । २ चन्द्रे । ३ चित्र वर्णम् ।

पद्मावान्स्यानुरोधादिति दनुजरिपुः स्वीयसूनोः शशाङ्कं
वीरं विश्वं जिगीषोः सपदि रतिपतेः साह्यभूतं चकार ॥९॥

यातेस्तं चण्डभानौ निशि निबिडतमस्तामसं पूरितायां-
मिन्दुर्नीलाम्बरेणावृतवपुरसितस्यास्यमङ्कच्छलेन ॥
कृत्वैवं मानिनीनां मनसि मतमहो मानमाच्छेद्य चित्रं
मीत्यारूढः कुरङ्गे परिपतति नभस्याशु राजा द्विजानाम् १०

अत्र हेतुः ।

मानाभावात्सपत्न्या अनुनयजनितं सौख्यमप्राप्यमाणं
ह्रत्वा न्यासात्तदिच्छुस्तमथ विनिदधे रोहिणीचित्तवृत्तौ ॥
स्वस्यासौ सन्निधानादपसरति ततस्तन्न विज्ञाय जाड्या-
द्भूयोभूयस्तदर्थे विधुरतियतते नाधुनाप्याप्तकामः ॥ ११ ॥

अपि च ।

वयं विजितहृच्छयाः विषयसङ्गशून्या वयं
वयं प्रशासितेन्द्रिया इति च गर्वभाजो नराः ॥
स्मरेण जयता ध्रुवं विजित एष तन्नासिका-
विलेपनकृते सुधाचषक इन्दुरुज्जृम्भते ॥ १२ ॥
सौभाग्यं किल मूर्तमेव ककुभां लीलारविन्दांशितं
लक्ष्म्या देवनकन्दुकः किमु रतेः पात्रं सुधापायिनाम् ॥
शृङ्गारस्य करण्डकः किमुदधेः फेनस्य पिण्डाश्चिरा-
दित्थं संजनयन्भ्रमं समुदितः प्रोद्दामधामा विधुः ॥१३॥

---

१ नक्षत्रराट् चन्द्रः । २ प्रीत्युत्पन्नम् । ३ जितकामाः । ४ सुधपात्रः सुधा अमृतं चूर्ण च । ५ दिशाम् । ६ क्रीडागेण्डुकः ।

इत्थं तर्कयत्सु लोकेषु भृगुरपि सुधांशुधामधवलितविपुलतान्तरालो वियच्चरचकोरनिचयस्यामृताशनशालामिव सम्प्रवृत्तां त्रियामां समालोक्य विष्टम्भितगमनवेगः सम्पादितसान्ध्यविधिश्च तैरेव तपस्विभिः सह तत्रैव तां निशामनैषीत् ।

कोकानां विरहेण नूतनरतौ सीदन्नवोढाधिना
कान्ताश्लेषसुखानुरक्ततरुणीप्रेमातिरेकेण च ॥
पद्मानां परिमीलनेन कुमुदप्रोन्मीलनेन स्वप-
ल्लोकस्वापसुखेन सार्धमगमद्दोषा[1] दिशं पश्चिमाम् ॥१४॥

ततः ।

अर्धोन्मीलत्कमलमुकुलोपान्तनिर्मुक्तगुञ्ज-
त्षट्पादालीकलरवनुतस्फीतसौभाग्यपूरम् ॥
दिग्मालिन्यप्रसरगरलग्रासकर्पूरगौरः
सुप्तोद्बुद्धद्विजकलकलैः प्रादुरासीत्प्रभातम् ॥ १५ ॥

तस्मिन्नवसरे ।

क्रीडामुत्थितपक्षिपक्षचलनैर्मालिन्यसत्यांगतः
सत्कारं वपुषो जनोत्सवचयप्रेक्षास्फुटत्पङ्कजैः ॥
हास्यं चापि विधाय भर्त्रुपगमाद्यानं विना चालये
प्राची सङ्गतभर्तृकेव समभूदुत्तीर्णचर्णिव्रता ॥ १६ ॥

अपि च ।

खण्डितामिव तां प्राचीमनुनेतुमिवांशुमान् ॥
स्वकरस्पर्शमात्रेण कृतवाननुरागिणीम्[2] ॥ १८ ॥

---

१ दोषा रात्रिः । २ रञ्जितां प्रीतियुक्तां च ।

बृहत्तिमिरसिन्धुरप्रमथनार्थमुद्गच्छतो
हरेः सपदि कस्यचित् समुपलेलिहानस्पृहा ॥
मुखाद्बहिरुपागता ललितशोणजिह्वेति किं
ततान भुवि विस्मयं तरणिबिम्बमर्धोदितम् ॥ १९ ॥

नभोम्भस्तामिस्रप्रसरदतिमालिन्यशरदः
सहस्रांशोरुच्चैरुदितवति बिम्बे द्युतिमति ॥
तमोनाष्टद्रोत्राविवरं इव संलनिपरमं
मुनीनां यच्चित्ते तदपि परिहर्तुं भृगुरगात् ॥ २० ॥

उषसि सरिज्जले निमज्जनं विधाय कार्यभरादिव संजातसङ्कोचनं नित्यकर्म समाप्य कृतविषयवासनानिधानांस्तपोधनानविलम्बितं जिगमिषुर्भृगुः सविनयमिदमभाषत ।

भवत्तथ्यवचःपथ्यपाथेयपथिकः पुमान् ॥
पाथोधिमपि वीथ्याम्बुप्रायं न मनुते कथम् ॥ २१ ॥

तत्कृतकल्याणरचनेन भवदाशीर्वचनेन समुत्पन्नकार्यविधानदाक्ष्योहं निर्विघ्नं गन्तुमुत्सुकोस्मि मामनुजानन्तु भवन्त इति । अथ कथनीयकीर्तय ऋषयः प्रोचुरुच्चैः ।

पन्थानश्च शिवास्तवामलमते गच्छन्तु कण्ठीरव[1]-
क्रीडादारितदन्तिराजकलभैर्जुष्टां[3] दशामार्तयः[4] ॥
याहि क्षिप्रमुपैहि तात चपलं स्तुत्यं च कृत्यं बुधै-
राक्लिष्टं प्रविधाय सायक इव श्रीकण्ठचापच्युतः[5] ॥२२॥

---

१ सिंहस्य सूर्यस्य । २ गुहायानित्यर्थः । ३ सिंहेन क्रीडया उत्पाटितो यः करिशावकः तत्प्राप्ताम् । ४ पीडाः । ५ पिनाकधनुषः प्रेरितः ।

२

तत्तात कृतकृत्यस्य तव क्षिप्रं पुनर्दर्शनमस्तु इति ।

मुनीशानां याशीर्वचनरचनोत्पादितधृतिः
प्राशान्तव्यामोहः सपदि सनितान्तप्रमुदितः ॥
त्रिलोकीसञ्चारक्षमगतिरजस्यौधिवसतिं-
प्रतस्थे प्रस्थानोचितविधिमुपास्येष्टफलताम् ॥ २३ ॥

इति सूरीन्द्ररामकृष्णविरचितायां श्रीभार्गवचम्प्वां द्वितीयस्तबकोयं समाप्तः ॥ २ ॥

---

## तृतीयस्तबकः ।

---

ततो भृगुर्गच्छन्नध्वानि कृत्यसिद्धिसूचकान् शुभशकुनानवलोक्य सहर्षम् ।

ध्वाङ्क्षा[२] दक्षिणतः प्रयान्ति सहसा चाषाः पुनः सव्यत-
श्चेतो मोदभरानतं च हरिणी शावेन साकं ययौ ॥
मन्दं गन्धजलौघबिन्दुनिचयप्रोद्भूतभारादिव
वाति श्लिष्टवियोगिनीहृदवनीसीरः[३] समीरः पुनः ॥ १ ॥

तत्सर्वथा कृतकार्योहमार्यदर्शनार्थमागयिष्यामीति विचिन्त्य अनेककोटिविमानवलयशालिना त्रिदिवाध्वना विलम्बितपदं संचरन् । ज्योतिष्टोमादिना प्राप्तनाकसौख्यान् सुकृतिमुख्यान्[४] विलोकयामास ।

---

१ ब्रह्मणः स्थानम् । २ काकाः । ३ वियोगिनीहृदयरूपायां पृथिव्यां लाङ्गलमिव दुःखप्रद इत्यर्थः । ४ पुण्यवन्मुख्यान् ।

क्वचिद्विबुधसुन्दरीसरसतानसारस्वर-
प्रभूतरसलालसप्रसृतकर्णशृङ्गारकः ॥
क्वचिद्युवतिकोमलावयवसौष्ठवालोकन-
प्रदत्तनिमिषोज्झितस्तिमितनेत्रपङ्केरुहः ॥ २ ॥

क्वचिच्चटुलकोकिलाविकलकण्ठघण्टारव-
प्रतिध्वनितपूरिते महति नन्दनाख्ये वने ॥
स्मरप्रहितसायकव्यतिकरातिभीरुः स्वयं
प्रयाति च मृगीदृशः स्तननगान्तराले जवात् ॥ ३ ॥

क्वचिल्लुलितनीविसंत्रुटितहारभाराद्रुत-
व्युदस्तकुचचोलके घटितहस्तमात्तालकम् ॥
प्रदष्टरदनच्छदं त्रिदशवारवामभ्रुवा
समं समरमारभत्स्मरजयाय कश्चित्कृती ॥ ४ ॥

इति सपदि विलोकयन्नयज्ञो
दिविचरकेलिकलाकलापमारात् ।
सुरसदनसदो विनिन्द्य दूरात् ॥
त्वरितपदं प्रययावसज्जमानः ॥ ५ ॥

अपि च ।
गीर्वाणवाणिनीभिः सहपुण्यजनव्ययोपयोग्याभिः ॥
रमतः सुरानमन्यत राजा वाराङ्गनाभिरिव लुब्धान् ॥ ६ ॥

इत्यतिव्रज्य वृन्दारकवृन्दममन्दगतेन तत्पुरस्थान्यतिक्रमितुं कृतवेगे भूगौ ।

---

१ वेगेनेत्यर्थः । २ नीतिज्ञः ।

स्वर्लोकं समतीत्य गच्छति पुरस्तस्मिन्नतर्किस्फुटं
देवैर्वासरमात्रलङ्घितहरिश्चक्रः स सौरो हरिः ॥
किंवा पादपपादपाटनपटुस्तीव्रो नभस्वान्पुनः
काकुत्स्थस्य किमुत्पथाशरशिरःसञ्चारसारः शरः ॥७॥

एवं तर्कितवत्सु सुपर्वसु महर्लोकादिलोकानतिक्रम्य किन्नरैः किन्नरीभिः समं सततं सङ्गीतविनुतारिङ्गतरङ्गां गङ्गामेवगाह्याग्रतः प्रतस्थे ।

जनकभवावृत्तान्तं विज्ञातुं व्योमवर्त्मनेव सुधीः ॥
रभसा लङ्कास्थानं विधिसूनुरगात् समीरसूनुरिव ॥ ८ ॥
सत्यलोकाभिधा यस्य सार्थकानन्यपेक्षया ॥
नान्धस्येव पितृप्रीत्या नाम राजीवलोचनः ॥ ९ ॥

न यत्र गच्छन्त्यघसंघसंगिनो न नास्तिकाचारपथानुसारिणः ॥
न योगनैष्ठिक्यशमाद्यकारिणस्ते यान्ति येधर्मधनैकशालिनः १०॥

यस्मिञ्छ्रीमद्भगवतो विराड्रूपस्य विष्णोः शिरोभूते स्वीकृताकृतयः श्रुतयः समवलोक्यन्ते । नैतावतैव ।

संवत्सरायनयुगर्तुसपक्षमास-
काष्ठाक्षणप्रहरवस्रमुहूर्तकाद्याः ॥
कालप्रधानमहदिन्द्रियचित्तधर्म-
प्राणादयस्तनुभृतो निवसन्ति यस्मिन् ॥

यश्च ।

---

१ स्नात्वा । २ हनूमान् ।

बृहद्व्रतवतां प्रेङ्खद्विमानैः सर्वतो वृतः ॥
यथा सूर्योदयोन्मीलत्पद्मकोशः शिलीमुखैः ॥ ११ ॥

परिखाप्राकारोच्चतरगोपुरैः सर्वतः कमनीयतमस्तमांसि स्वकान्तिकलयाकवलयन् विराजते। यत्समंततः सततवसद्वसन्ताञ्चितवासं कारिकासिकुसुमसौरभ्यलुभ्यन्मधुकरनिकरमृदुमधुरझाङ्काराभिसाराव्यापृतविरहाधीरमधुकरीगणपक्षविपक्षोत्पवमानसञ्चलन्मञ्जुसन्तानतरुपल्लवैरनिशं दिव्याङ्गनासंगातिसक्तानां यूनां कृतमारविडम्बनानि संत्युपवनानि ॥ १२ ॥

यत्र स्वयं सृष्टिविधानदक्षो दक्षादिकाध्यक्षगृहीतशिक्षः ॥
साक्षात्स्वयम्भूर्निवसत्यभीक्ष्णं कः क्षीणधीस्तं क्षमते प्रतोष्टुम् १४

यस्मिन्निखिलजगन्निर्याणवैदग्ध्यनिधेर्विधेररति सभा । यस्यामखिलनिगमार्थपरिशीलनपरिज्ञातधर्माद्यनेकसाधनसमूहपरिहृतहृत्कषायास्तत्क्षणे मोक्षपदप्राप्तिक्षमा अपि स्वोपास्यचतुरास्याभिमत्या सम्प्राप्तद्विपरार्धावसानव्यवधानाः पूर्वचित्याद्यप्सरसां मधुमाधुरीसमधुरीकरणपटुमाधुर्यसरसङ्गीतश्रवणजनितानन्दतुन्दिलमनसस्तपस्विनः सभ्यत्वं भजन्ति। यस्यां च वासवादिविबुधविद्याधरसिद्धगन्धर्वैर्निजमुकुटतटखचितविमलहीरनीराजितचरणराजीवः प्रजासर्गनोदितप्रजापतिमण्डलो जगन्निर्माणप्रवणान्तःकरणः स्वीयमध्यासनमध्यास्ते । तस्मिन्महताध्वना सञ्चरन् काप्यसज्जमानोद्यैव मज्जनहृज्ज्ञानामीति सज्जमानः सज्जनाग्रणीः पथि

---

१ भृङ्गसमुदाय ।

पथि नमज्जननमस्यानपेक्षो विघटितपटुकपाटिकाद्वारः समतिक्रम्य इन्द्रनीलमणिविरचितसम्पत्कुट्टिमान्तरान्तरनिर्बद्धविधुकान्तकान्त्युपहसितभरणं सभाङ्गणमुल्लङ्घ्य भृगुः ।

पारिहृततिमिरौघं पावकोद्धर्तकार्त-
स्वरविरचितभित्तिव्युप्तरत्नप्रभाभिः ॥
अथ झटिति सभान्तं न्यस्य भीतिर्दिवेशे
निजजनकसुनृत्यद्भूतटीसूत्रधारः ॥ १९ ॥

सति कृतप्रवेशे तस्मिन् ।

चिरसङ्गतयोः पितृपुत्रयोः प्रियसङ्गमम् ॥
पश्यामो हन्त हृष्यामः प्रणयोद्रेकदर्शनात् ॥ १६ ॥

एवं समुत्सुकेषु सभासत्सु भृगुरपि विधातुरविदूरे सञ्चरन्नप्यकृतगुणवर्णनप्रणामः स्वप्रौढं नाटयन् सार्वज्ञं निजपितरमनवेक्ष्यैव संविवेश ।

सानन्दोपि सवन्दनादिषु पितुस्त्यक्तार्यमर्यादव-
त्सावज्ञं न चकार कारणवशात्तस्मै प्रणामादिकम् ॥
सोत्कण्ठापि चिरागतप्रियपरिष्वङ्गाय लज्जावशा-
दुन्मुक्तप्रणयेव भर्तारि परीरम्भं सतीवाङ्गना ॥ १७ ॥

तत्रावसरे सदःसमक्षमात्मावहेलं मन्वानः स मन्वादिजनपिता कमलासनः ।

रोषावेशकषायिलोचनगुणभ्रूचापवेगच्युता-
पाङ्गोद्दामशिलीमुखैः स बिभिदे हृत्पङ्कजातं भृगोः ॥

---

१ कार्तस्वरं सुवर्णम् । २ प्रणयः प्रीतिः उद्रेकः अतिशयः। ३ गतप्रीतिः ।

नैव स्नेहवशेन ते विदधिरे भेदं मुदा रेमिरे

तस्मिन्नस्तमितासु ते पुनरहो मोहस्य चित्रा गतिः ॥१८॥

एवमपि रोधनिःशेषितधृतिर्विधूतनयं[1] निजतनयं दिधक्षन्निव[2] विलोकयांचक्रे ।

आश्चर्यं किमिदमधीरमानसानां

क्रोधो यद्धुरतितरां धृतिं नराणाम् ॥

यस्यास्योदयसमकालमेव चक्रे

सावज्ञं शतधृतिमाशु धैर्यरिक्तम् ॥ १९ ॥

पुनः स्वतनयेऽविनयसम्भवः कथमित्याशङ्क्य चिरं चिन्तयाञ्चकार ।

दक्षा दक्षादयः सर्वे तनया नयवर्त्मनि ॥

अयं कथमिवोत्पन्नः चन्दनात्कुटजाङ्कुरः ॥ २० ॥

विस्पष्टं दुष्टसङ्गेन कष्टं भ्रष्टो हि मत्सुतः ॥

न किं मृगमदामोदो हिङ्गुसंगेन नश्यति ॥ २१ ॥

तथाभूतानां केषाञ्चित्सङ्गेनैतद्भावं प्राप्तस्यास्य दृगौद्धत्येन[3] किमप्याश्चर्यम् ।

काकानां कुरुते नतेन फणिनां दंशेन हिंसाशया

व्याघ्राणामसदाखुतः सुवसनच्छेदेन वित्तः क्षणात् ॥

क्रोडानामथ रक्षसां द्विजवधाद्दुर्वायुना पानतो

दुष्टानामनयादिदुर्गुणचयाद्वा हन्त को विस्मयः ॥२२ ॥

---

१ भ्रष्टनीतिम् । २ दग्धुमिच्छन् । ३ दृष्ट्युन्मत्तेन ।

अथ वा नैकस्य सर्वाण्यपत्यानि गुणैः समान्येव भवन्तीति-विस्मयः ।

कमलासुधासुधाकरहालाहलशंखवारुणीकरिणः
तरुतुरगधेनुभिषगप्सरसः सिन्धोरपत्यानि ॥ २३ ॥

अपि च ।

त एते सूनवः ख्याता नूनं किरणमालिनः ॥
भिषजावश्विनौ शास्ता यमः क्रूरः शनैश्चरः ॥ २४ ॥
पटीयाननघः श्रीमान् वदान्योपीच्यदर्शनः ॥
विनीतस्तनयः पुण्यैरगण्यैरिह लभ्यते ॥ २५ ॥

तदकृतभूरिसुकृतोहमेव किमेतेन शिक्षितेनेति विचारपरवशे मनसि विमनसि ।

सम्बन्धभाषणमुखाकृतिभिः परेषां
जानन्ति हृच्चरममध्यमबुद्धिमन्तः ॥
तत्रार्यधीर्भृगुरतः पितुरिङ्गितेन
स्वान्तं प्रचण्डतरकोपवशं बुबोध ॥ २६ ॥

बुद्ध्या पितुस्तेन कृतावमाने हेतुं विनिश्चेतुमलं न सभ्याः ॥
एवं हि गम्भीरतरान्तरास्ते प्रारम्भदुर्ज्ञेयविधेयमार्गाः ॥२७॥

एवं स्वपितरि मुनिरुपदिष्टशान्ते कारुण्यादिसद्गुणाभावमनुभूय ततः स्वौद्धत्यपरिहाराय धातारमनुप्रणमन् सरस्वतीतीरस्थमुनिजनादेशकरोहं न ज्ञेयमुद्धतत्वमित्यनुवेलं विज्ञापयांबभूव । ततः । स निःशेषितकोपपङ्कः पङ्कजासनः सविनयं निजच-

---

१ लक्ष्मीः । २ बृहस्पतिः ।

रणप्रणतं भृगुमुत्थाप्य शिशिरतममात्मजालिङ्गनानन्दं क्षणमनुभूतवान् ।

कर्पूरः स हिमालयः समलयः क्ष्मानन्दनश्चन्दनः
सप्रालेयरविः शुचिप्रवहतां पूरः सरित्पाथसाम् ॥
स प्रातः शिशिरो मरुत्कमलिनीनालं परेपीदृशाः
पुत्रालिङ्गनपथ्यशैत्यनिवहस्यार्हन्ति नैते कलाम् ॥२८ ॥

लोकोत्तरमस्येदं दाक्ष्यमिति सविस्मयेषु सभ्येषु ॥
निजपितरमनुज्ञाप्य प्रस्थानं चाकरोद्भृगुस्तस्मात् ॥ २९ ॥

इति श्रीमत्सूरीन्द्ररामकृष्णपण्डितविरचितायां भार्गवचम्प्वां तृतीयस्तबकः ॥ ३ ॥

---

## चतुर्थः स्तबकः ।

ततः कतिपयक्षणैः प्रणतजन्मिजन्मार्जित-
प्रभूतदुरितद्रुमक्षयदवस्य गौरीपतेः ॥
शिलोच्चयमगाद्द्रुतं द्रुहिणसुनुरुत्संसर-
त्समीरणरयाधिकप्रबललोललोलागतिः ॥ १ ॥

ततो विदूरे पुर एव पुरारिगिरिमपश्यत् ।

स्वर्गङ्गोदकफेनपारदसुधाकुन्दन्दुमुक्तास्फुर-
द्विद्युन्निर्जरधेनुनिर्मलपयःकर्पूरकम्बुप्रभाम् ॥
मुष्णन्युच्चतरेण कान्तिपटलेनात्युन्नतो राजते
कैलासः सुरधुर्यधूर्जटियशःसंघात एव ध्रुवम् ॥ २ ॥

यत्र ।

नोल्लासः पङ्कजानामविकसनमथो नैवमिन्दीवराणां
योगः कोकाङ्गनानामभिमतिरनिशं कामिनीनां न यस्मिन्॥
तापः सचारभाजां रविकरनिकरान्नेन्दुपीयूषभाजां
क्षुद्बोधश्चाण्डजानां त्रिपुरहरशिरश्चन्द्रिकासन्निधानात् ३
गौरीकर्पूरगौरोरगतुहिनकरोक्षादिभिः क्षीरगौरै-
र्हग्दोषान्ताय चात्तं नयनगलफणामध्यमुष्केषु नैल्यम् ॥
नूनं तस्मादिनाच्छस्फटिकमणिशिलाजालशाली स शैलः
प्रावृण्मेघानुकारिद्युतिभरमधुरान्सिन्धुरान्संदधार ॥ ४ ॥

इतो बकुलमण्डलं नवतमालमालामितः
कदम्बपटलीमितस्तिलकतालसन्धानितः ॥
इतश्च कदलीरितो विबुधपादपानां कुलं
पुपोष महतामहोच्छ्रितजनेनुकम्पाभरः ॥ ५ ॥

इति कौतूहलाञ्चितचितः स द्विजः क्षणमवलोकयांचक्रे । तस्मिन्ननवरतवसन्तावतारविस्फारितनवकिसलयकुसुमभराभुग्नब-न्धुरस्कन्धतरुसमारूढकलकण्ठकण्ठध्वानिप्रतिध्वानवति । अत्यु-च्चतरतरुशिखरारूढकिन्नरमिथुनषड्जादिस्वरगीयमानमहेशयशः-पीयूषमनुरिमाणमास्वाद्यानन्दसन्दोहपरवशतया विगलितस्मृतिः क्षणं बभ्राम । ततः कार्यवशादाप्तस्मृतिर्भृगुः । हरचरणराजीवा-

---

१ सूर्यकान्तमणि–प्रफुल्लितः । २ बन्धुरी वृक्षविशेषः ( सापल्याचें झाड )।

लोकनोत्कण्ठितस्वान्तैर्विबुधविद्याधरतापसादिभिरनिशमभ्यस्तया पदव्या श्रीमन्महेशद्वारप्रदेशमाससाद ।

भ्रभङ्गकुटिविभ्रमद्विकटचण्डदण्डायुध-
प्रचण्डभटमण्डलीभुजभुजङ्गभङ्गक्षमैः ॥
तुषारगिरिगौरवैः प्रथमयूथनाथाधिपैः
सुगुप्तमनिशं निशाकरकलावतंसानुगैः ॥ ६ ॥

तत्र । निजनाथस्य शिवस्य अनुजन्मा कनिष्ठभ्राता अयं भृगुः-पूर्वं रुद्रो भृगुरप्यनन्तरं ब्रह्मणः पुत्रोयमिति सविनयं नमद्भिः प्रमथगणैरनिवारित एव प्रविवेश ।

वारणशतानि विप्रैः प्राप्यन्ते क्षुद्रभूपतेर्द्वारे ॥
द्वारे धनदपतेरपि नैकमपि प्राप वारणं[1] स भृगुः ॥ ७ ॥

अथ चपलपदं सदःसन्निधिं स विधिसुतः समासाद्य अतर्कितकार्यविधानदक्षः शोणाक्षिकोणेन क्षणमपश्यत् यस्मिंस्तत्त्वाविमर्शहर्षिततनूरुहैः सनकादिसिद्धसमूहैरनुक्षणमुपास्यमानः स भगवान् भवः सततमास्ते ।

गौरवं गीयते तस्य विमन्यैर्जगतां गुरोः ॥
सद्योजातोपि यः प्राचामाचार्यपदवीं गतः ॥ ८ ॥

क्व नारीपीनोरःप्रभवपरिरम्भव्यतिकरः
क्व शून्यव्यामोहव्यसनततिरात्मन्यभिरतिः ॥
तयोरेकत्रैव स्थितिमपि निसर्गाद्विषमयोः
सदान्यस्तासूयं घटयितुमलं कस्तदपरः ॥ ९ ॥

---

१ वारणं हस्ती निवृत्तिः ।

यस्याद्भुतं चारित्रम् । यः सकललोकभवभयसंहरणोपि भव-भीमश्च सर्वामरमौलिस्थलीव्युप्तचिन्तामणिरपि कपर्दी । जगन्निवासोपि श्मशानवासः सर्वजगदन्धःप्रदोपि भिक्षाशनः । जगत्प्रावरणोपि कौपीनधरः । दिक्पालार्पितश्रीरप्यकिंचनः । अहो मित्रपदवीं प्राप्तः कुबेरोप्येतत्प्रसादनात् विपुलसम्पद्भरोपि लोकेकृतव्रतनिर्भयत्वेनास्य किंचनत्वं कथमुपेक्षते ।

कौपीनेन्दुकपालकृत्तिभसिते प्रेतास्थिमालाविष-
व्यालालङ्करणस्य सद्वयपतेरर्धाङ्गजायाकृतेः ॥
दारिद्र्यं दधतः श्मशानवसतेर्यद्गुह्यकेशः सखा
ख्यातोसौ धनदो मुधा बुधजनैर्यो नाभिजातः खलु॥१०॥

अत्र कारणमेतदेवेत्यवगम्यते ।

लोके यत्किल वैभवं तदखिलं गौरीशकारुण्यतो
निःस्वत्वे खलु तस्य कारणमदः शङ्केहमेकं पुनः ॥
यक्षाक्रान्तधना हि यान्ति धनिनो नैःस्वं तु यक्षाधिपः
कोशो यस्य सदाधितिष्ठति न किंयास्यत्यसौ निःस्वताम् ११

स इत्थं सभोपान्ते तिष्ठन् स्वान्ते एव सविस्मयं तर्कयामास। ततो भगवानपि चिरादुपगतमात्मबन्धुमवलोक्य सोत्कण्ठम् ।

उत्सङ्गाच्छैलकन्यां त्वरितमपनयन्बन्धुविश्लेषदुःखं
स्वान्तादुत्कृत्य पीठात्त्वरितमथ सुहृत्स्नेहपाशाविव द्वौ ॥
दोर्दण्डौ सम्प्रसार्य प्रसभपदगतिः स्नेहविक्लिन्नचेता
आश्लेषार्थं समायाद्गुसविधमहो मोहपाशो बलीयान् ॥१२॥

१ व्युप्तः 'डुवप् बीजसंताने'क्तः । २ कपर्दो जटाजूटः 'कवडी'। ३ अन्धः अन्नम् । ५ कुबेरः ।

इत्थं नीलकण्ठं निजोपकण्ठं समागतमवेक्ष्य सतिरस्कारं भृगुरवोचत् । श्रूयतामनभिज्ञ ।

स्फुटं प्रीतिर्लोके समगुणवतामेव सुभगा
क ते शीलं भूषा चरितमथ वासः क च मम ॥
न मां स्प्रष्टुं योग्यः किमुत परिरब्धुं त्वमशुचिः
समीहे सम्बन्धं न तव भव दूरीभव जवात् ॥ १३ ॥

किंच ।

चिताभसितभूषितं विगतशौचमाभीषणं
कपालवदशोभनं शववितण्डमुण्डस्रजा ॥
श्मशानमिव ते वपुर्यदनवेक्षणीयं सदा
सदाचरणशालिनः किल न रन्तुमस्मिन् क्षमः ॥ १४ ॥

एवमखिलश्रुतिनिकरसंनुतपदपङ्कजः शङ्करः अकारणं दुरुक्तैस्तुदन्तं भृगुं शोणायमानदृक्कोणेनावलोक्य ।

कोपाटोपावधूतभ्रुकुटितटभवद्दान्तसम्पातदीप्य-
द्भालस्थोदग्रवह्निप्रसरदुरुतरज्वालमालावलीढम् ॥
ब्रह्माण्डं संविधित्सन्निव पवनगतिर्वाडवं हन्तुमुच्चै-
रुद्यम्योद्दामशूलं प्रमथपतिरगादाशु वीतानुरागः ॥१५॥

तंप्रत्यतिपरुषतरमभाषत ।

---

१ अशुद्धम् । २ कुम्भशकलयुक्तं पक्षे भिक्षापात्र( परळ )युक्तम् । ३ संस्तुतपादकमलः । ४ क्रोधवेशेनावधूतं यद्भ्रुकुटितटं तन्मध्ये उत्पन्नः दान्तसम्पातो दमितवेगो भालस्थः प्रचण्डः वह्निस्तृतीयनेत्रानलः तस्य प्रसरन्त्यः उरुतराः अतिशयेन ज्वालमालाः ज्वालासमूहाः तेनावलीढं व्याप्तम । ५ दग्धुमिच्छन् । ६ शिवः ।

सत्रान्नपीवरनितम्ब कथं बतासि
त्वं नित्यहोमभवधूमविधूसराक्षः ॥
किं मर्तुकाम इव जल्पसि मामनल्पं
शूलाहतस्त्यज कुलायमिदं मदग्रे ॥ १६ ॥

एवं भगवतः खण्डपरशोरकाण्डविध्यण्डभङ्गशङ्काशंसिनृशंसरोषभीषणानलज्वालावलिषु पतङ्गायितमात्मानमवेक्ष्य स भृगुर्भ्रमन्नेत्रः सरभसमभयलम्भनाय श्रीशम्भुसम्भावनीयसौभाग्यभुवं भवानीं संस्तवैरदम्भं सम्भावयामास ।

सरम्भसतरसरवाच्चण्डदोर्दण्डसन्मण्डलाकृष्टकोदण्डदण्डाग्रनिर्मुक्तनालीकरंहस्त्रसद्व्यस्तशस्त्रासुरस्तोमसम्भावितोदारपादाम्बुजे प्रमथितजगदण्डवेतण्डदण्डायुधक्राधाक्स्फूर्जतप्रोद्भवद्भीतिबिभ्यन्नताधिप्रशान्तिक्षमोदारकीर्तीन्दुभूरिप्रभापूरिताशेषदिग्मण्डले ॥ प्रचलदमलकर्णताटङ्ककोपान्तसव्युप्तसद्धीरकोद्गच्छदच्छप्रभाचक्रवालस्फुटोदारसञ्चारलीलाभिभूतोदितग्रीष्मतिग्मांशुतिग्मप्रभे । प्रकुपितशिवकोपसम्प्रच्यवद्भूरिदानोदयोदामदर्पान्धगन्धद्विपालानसंदर्शने पाहि मामद्य भूताधिपोदग्रशूलाज्जगद्धात्रि तुभ्यं नमः ॥ १७ ॥

तदानीमनुकम्पया तदवनाय ।

दरद्योतोदारप्रहसितगुणाकृष्टपुरजि-
न्मनोमीनामानापनयनविधौ व्यग्रमनसा ॥

---

१ कुलायं जीवस्थानं देहमिति यावत् । २ नालीका बाणाः । ३ हस्तिबन्धनस्तम्भः । ४ दरः शंखस्तस्य द्योत इव उदारं प्रहसितं हास्यम् ।

